गच्छीय गुरुपरम्पराओं के अतिरिक्त इनके संबंध में कोई उल्लेख भी नहीं मिलता। अतः यह सिद्ध है कि पिण्डविशुद्धिकार जिनवल्लभगणि कोई पृथक् आचार्य नहीं है किन्तु अभयदेवाचार्य के शिष्य खरतरगच्छीय ही हैं, तथा इनके सिद्धान्त भी सर्वमान्य हैं।



## पिण्डविशुद्धिप्रकरण।

आत्मसाधना की दृष्टि से पिण्ड-भोजन की शुद्धि होना अत्यावश्यक है, अन्यथा 'जैसा खावे अन्न वैसा होवे मन्न' की उक्ति के अनुसार मानसिक शुद्धि नहीं हो सकती। इसीलिये श्रमण संस्कृति एवं श्रमण परम्परा में संयमी मुनियों का यह प्रमुख अंग माना गया है। पूर्व में श्रुतधर श्रीशय्यंभवसूरिने दशवैकालिक सूत्र में और आचार्य भद्रबाहुस्वामीने पिण्डनिर्युक्ति में इस विषयका बहुत ही विस्तृत और सुन्दर पद्धति से प्रतिपादन किया है। परन्तु वह विस्तृत होने के कारण कण्ठस्थ करने में अल्प बुद्धिवालों की असमर्थता देख कर आचार्य जिनवल्लभसूरिने पिण्डविशुद्धि नाम से इस प्रकरण की स्वतन्त्र रचना की।

इस प्रकरण में कुल १०३ पद्य हैं। १-१०२ तक आर्या छन्द में हैं और अन्तिम पद्य शार्दूलविक्रीडितवृत्त में। इस में ग्रन्थकारने प्रथम और द्वितीय पद्य में नमस्कार और प्रयोजन कथन कर, ३-४ पद्य में गृहस्थाश्रित उत्पादन के १६ दोषों का नामोल्लेख मात्र किया है और ५ से ५७ तक इनका विस्तृत विवेचन किया है। पद्य ५८-५९ में साधु आश्रित उद्गम के १६ दोषों का नामोल्लेख है और ६० से ७६ तक इनका विस्तृत विवेचन है। इस प्रकार कुल गवेषणा और एषणा के मिला कर ३२ दोषों का वर्णन यहाँ पूर्ण होता है। तदनन्तर ग्रहणैषणा के १० दोषों का ७७ वें पद्य में उल्लेख कर ७८-९३ तक इनका विस्तृत प्रतिपादन किया है। पश्चात् ९४ वें पद्य में भक्षण-ग्रासैषणा के ५ दोषों का उल्लेख और १०१ तक उनका विवेचन है।

१०२ वें पद्य में शुद्धि का निर्जरा फल और अन्तिम पद्य में ग्रन्थकार का नामोल्लेख है। इस प्रकार भोजनशुद्धि के ४७ दोषों का अनेक भांगों सहित विवेचन १०३ श्लोक के छोटे से प्रकरण में वह भी आर्या जैसे लघुमात्रिक छन्द में ग्रथित करना गणिजी का उक्तिलाघव और छन्दयोजना का चातुर्य प्रकट करता है। उक्त प्रकरण में प्ररूपित ४७ दोष निम्नलिखित हैं:—

गृहस्थाश्रित उत्पादन के १६ दोष–१ आधाकर्मिक, २ औद्देशिक, ३ पूतिकर्म, ४ मिश्रजात, ५ स्थापना, ६ प्राभृतिक, ७ प्रादुष्करण, ८ क्रीत, ९ प्रामित्य, १० परिवर्तित, ११ अभिहृत, १२ उद्‌भिन्न, १३ मालोपहृत, १४ अच्छेद्य, १५ अनिसृष्ट और १६ अध्यवपूरक.

साधु आश्रित उद्‌गम (संपादन) के १६ दोष–१ धात्री, २ दूती, ३ निमित्त, ४ आजीव, ५ वनीपकत्वकरण, ६ चिकित्सा, ७ क्रोध, ८ मान, ९ माया, १० लोभ, ११ पूर्व पश्चात्संस्तव, १२ विद्याप्रयोग, १३ मन्त्रप्रयोग, १४ चूर्णप्रयोग, १५ योग और १६ मूलकर्म।

ग्रहणैषणा के दस दोष—१ शङ्कित, २ म्रक्षित, ३ निक्षिप्त, ४ पिहित, ५ संहृत, ६ दायक, ७ उन्मिश्र, ८ अपरिणत, ९ लिप्त और १० छर्दित।

ग्रासैषणा के पांच दोष—१ संयोजना, २ प्रमाण, ३ अंगार, ४ धूम, ५ अकारण।

### टीकायें—

इस प्रकरण की प्रसिद्धि श्रमणसमाज में काफी हुई; इस का पठन–पाठन अत्यधिक वेग से चला, आज भी सैकड़ों हस्तलिखित प्रतियों की उपलब्धि इसके प्रचार का प्रमाण दे रही है। इस पर कई जैन विद्वान् आचार्योंने टीकायें रच कर इसकी प्रामाणिकता सिद्ध की है। वर्तमान में इस पर निम्नलिखित टीकायें प्राप्त हैं:—

१ श्रीचन्द्राचार्यकृत वृत्ति, २ यशोदेवसूरि रचित लघुवृत्ति, ३ उदयसिंहसूरि विरचित दीपिका, ४ अजितदेवसूरि गुंफित दीपिका, ५ संवेगदेवगणि लिखित बालावबोध, ६ ? अज्ञात कर्त्तृक अवचूरि।

प्रस्तुत संस्करण यशोदेवसूरि कृत लघुवृत्ति एवं उदयसिंहसूरि प्रणीत दीपिका सहित प्रकाश में आ रहा है।

## लघुवृत्तिकार–यशोदेवसूरि

चन्द्रकुलीय श्रीवीरगणि के प्रशिष्य श्रीचन्द्रसूरि के आप शिष्य थे। सं. ११७६ में अपने सुयोग्य शिष्य श्रीपार्श्वदेवगणि की सहायता से आपने इसकी रचना पूर्ण की। इस का संशोधन आचार्य मुनिचन्द्रसूरिने किया। जैसा कि प्रशस्ति में कहा गया है:—

आसीच्चन्द्रकुलोद्भतिः शमनिधिः सौम्याकृतिः सन्मतिः, संलीनः प्रतिवासरं निलयगो वर्षासु सुध्यानधीः।
हेमन्ते शिशिरे च शार्वरहिमं सोढुं कृतोर्ध्वस्थिति–र्भास्वच्चण्डकरे निदाघसमये चाऽऽतापनाकारकः ॥ १ ॥
आदेयतातपस्त्याग–व्याख्यातृत्वादिसद्गुणैः। लोकोत्तरैर्विशालश्च, श्रीमद्वीरगणिप्रभुः ॥ २ ॥ [ युग्मम् ]
श्रीचन्द्रसूरिनामा, शिष्योऽभूत्तस्य भारतीमधुरः। आनन्दितभव्यजनः, शंसितसंशुद्धसिद्धान्तः ॥ ३ ॥
तस्यान्तेवासिना दृब्धा, श्रीयशोदेवसूरिणा। सुशिष्यपार्श्वदेवस्य, साहाय्यात् प्रस्तुता वृत्तिः ॥ ४ ॥

* * *

पिण्डविशुद्धिप्रकरण–वृत्तिं कृत्वा यदवाप्तं मया कुशलम्। तेनाऽऽभवमपि भूयाद्, भगवद्वचने ममाऽभ्यासः ॥ ६ ॥

१ विजयदानसूरि जैन ग्रन्थमाला, सुरत से प्रकाशित।

श्रुतहेमनिकषपट्टैः, श्रीमन्मुनिचन्द्रसूरिभिः पूज्यैः। संशोधितेयमखिला, प्रयत्नतः शेषविबुधैश्च ॥ ७ ॥

टीका को देखते हुए यह मालूम होता है कि व्याख्याकार ‘ मूले इन्द्र बिडौजा टीका ’ के चक्र में नहीं फंसे हैं और न इसका व्यर्थ में कलेवर ही बढाया है, किन्तु ग्रन्थकार के आशय को विशदता और सरसता के साथ बहुत ही सुन्दर पद्धति से स्पष्ट करने का प्रयत्न किया है। भाषा भी आप की दूरुह न होकर सरल होते हुए भी प्रवाहपूर्ण एवं परिमार्जित है। साथ ही इसकी एक यह भी विशेषता है कि विषय को रोचक बनाने के लिये प्रसंग–प्रसंग पर अनेक उदाहरण भी दिये गये हैं। उदाहरण बृहद्वृत्ति की तरह विस्तृत न हो कर संक्षेप में ही हैं, पर जो हैं वे भी प्राकृत आर्याओं में। इससे स्पष्ट है कि आप का प्राकृत भाषा पर भी अच्छा अधिकार था। यह वृत्ति लघु होते हुए भी अपने में पूर्ण है।

आपके प्रणीत और भी ग्रन्थ प्राप्त होते हैं, जिनकी सूचि निम्न प्रकार है:—

आपने सं. ११७२ में हारिभद्रीय पंचाशक प्रकरण पर चूर्णि, सं. ११७४ में इर्यापथिकी, चैत्यवन्दन और वन्दनक पर चूर्णियें, ११७८ में पाटण में सिद्धराज जयसिंह के राज्य में सोनी नेमिचन्द्रकी पौषधशाला में निवास करते हुए पाक्षिक सूत्र पर सुखावबोधा नाम की टीका और सं. ११८२ में रचित प्रत्याख्यान स्वरूप की रचना की हैं।

## दीपिकाकार–उदयसिंहसूरि

चन्द्रकुलीय आगमज्ञ श्रीश्रीप्रभसूरि ( धर्मविधिप्रकरणकार ) के प्रशिष्य श्रीमाणिक्यप्रभसूरि ( कच्छूली के पार्श्वचैत्य के प्रतिष्ठाकार ) के शिष्य श्रीउदयसिंहसूरिने आचार्य यशोदेवसूरि की वृत्ति को आदर्श मानकर तदनुसार ही सं. १२९५ में ७०३

श्लोक प्रमाणवाली इस दीपिका की रचना की। जैसा कि प्रशस्ति से स्पष्ट है:—

इति विविधविलसदर्थं, सुविशुद्धाहारमहितसाधुजनम् । श्रीजिनवल्लभरचितं, प्रकरणमेतन्न कस्य मुदे ? ॥ १ ॥
मादृश इह प्रकरणे, महार्थपङ्कौ विवेश बालोऽपि । यद्धस्त्यङ्गुलिलग्न-स्तं श्रयत गुरुं यशोदेवम् ॥ २ ॥
आसीदिह चन्द्रकुले, श्रीश्रीप्रभसूरिरागमधुरीणः । तत्पदकमलमरालः, श्रीमाणिक्यप्रभाचार्यः ॥ ३ ॥
तच्छिष्याणुर्जडधी-रात्मविदे सूरिरुदयसिंहाख्यः । पिण्डविशुद्धेर्वृत्ति-मुदध्रे दीपिकामेनाम् ॥ ४ ॥
अनया पिण्डविशुद्धे-र्दीपिकया साधवः करस्थितया । शस्यावलोककुशला, दोषोत्थतमांस्यपहरन्तु ॥ ५ ॥
विक्रमतो वर्षाणां, पञ्चनवत्यधिकरविमितशतेषु । विहितेयं श्लोकैरिह, सूत्रयुता त्र्यधिकसप्तशती ॥ ६ ॥

× × ×

अन्य बृहद्वृत्तियों, लघुवृत्तियों का आश्रय लेकर इस दीपिका की रचना हुई है। यह संक्षिप्त होते हुए भी वस्तुतः प्रस्तुत प्रकरण के लिये दीपिका सदृश ही है। संक्षिप्त रुचि तज्ज्ञों के लिये यह दीपिका अत्यन्त ही महत्त्व की है। इस की भाषा भी सरल है, संक्षित होने पर भी विषयों का प्रतिपादन इसमें बहुत ही सुन्दर ढंग से किया गया है। इस में दीपिकाकारने कथानकों का आश्रय लेकर कलेवर बढाने का प्रयत्न नहीं किया है। उदाहरणों के लिये वृत्तियों का उल्लेख कर दिया है।

उदयसिंहसूरि के सम्बन्ध में देशाइने अपने ' जैन साहित्यनो संक्षिप्त इतिहास ' में लिखा है :—

" ते उदयसिंहे चड्डावलि ( चन्द्रावती ) ना राउल धंधलो देवनी समक्ष मन्त्रवादिने मन्त्रथी हराव्यो। तेणे पिण्डविशुद्धि-

विवरण, धर्मविधिवृत्ति अने चैत्यवन्दन दीपिका रची। अने ते सं. १३१३ मां स्वर्गस्थ थया। पछी कमलसूरि, प्रज्ञासूरि, प्रज्ञातिलकसूरि वगेरे थया।" [ पृ. ४३४ ]

प्रस्तुत संस्करण सम्पादन-पद्धतियों से युक्त होने के कारण महत्त्व का है। सम्पादक श्रीगणिवर बुद्धिमुनिजीने इसके सम्पादन में अत्यधिक परिश्रम किया है, और उन्होंने स्थान स्थान पर टिप्पणीयें प्रदान कर इस की महत्ता में भी वृद्धि करदी है इससे इस ग्रन्थ की उपयोगिता और अधिक बढ गइ है।

आश्विनशुक्ला ५, सं. २०१०
कोटा ( राजस्थान )

पूज्य श्रीजिनमणिसागरसूरीश्वरान्तेवासि
उपाध्याय विनयसागर
साहित्याचार्य, जैनदर्शनशास्त्री, साहित्यरत्न,
काव्यतीर्थ, काव्यभूषण, शास्त्रविशारद



ॐ नमोऽर्हतेऽविसंवादिने श्रमणाय भगवते महावीरायापश्चिमतीर्थंकराय।

## पिण्डविशुद्धेरुपक्रमः।



येनेदं सकलं समूलनिचयं कर्माष्टकं चूर्णितं, दुश्छेद्यं विषमं प्रशान्तकुटिलं नित्यं समुत्पादितम्।
येनेदं चिरकालरूढविटपं ध्यानेन भस्मीकृतं, तं वन्दे परमेश्वरं जितरिपुं देवाधिदेवं जिनम्॥ १ ॥+

वाचंयमो युगवरो जिनचन्द्रसूरिः, सिद्धान्तवृत्तिरचकोऽभयदेवसूरिः।
आर्योत्तमोऽत्र जिनवल्लभसूरिरर्ह–च्छिष्टिप्रपालनवितानपरो विभाति ॥ २ ॥*

जीयासुर्विधिमार्गगाः सुविहिताः श्रीमोहनाख्या मुनि–व्रातैः सेवितशिष्टिकाः खरतरे गच्छे प्रतापोर्जिताः।
पूज्याः सन्मुनिकेशरा जिनयशस्सूरीश्वराः श्रीजिन–र्द्धीशाः श्रीमुनिकेशरा गणिवराः श्रीरत्नसूरीश्वराः॥ ३ ॥*

हंहो विद्वज्जनवरिष्ठा विमर्शप्रवणाः पाठकप्रष्ठाः! समादीयतामाहारादिपिण्डदोषनिरूपणचणत्वेनान्वर्थाभिधानमेतत्पिण्डविशुद्धि-नामकं प्रकरणरत्नं व्याख्याद्वयोपेतं भावत्के करकुड्मले सादरं समर्प्यमाणं। विनिर्मातारश्चास्य कविचक्रचक्रवर्त्तिनः सुगृहीतनामधेयाः सुविहितश्रमणपथप्रद्योतका उज्झितचैत्यवासकल्मषाः नवाङ्गवृत्त्याद्यनल्पग्रन्थसौधसूत्रणसूत्रधारायमाणानां श्रीमतामभयदेवसूरिमिश्राणा-मौपसम्पदिकशिष्याश्चैत्यवासिप्रथितश्रीवीरविभुगर्भापहाराकल्याणकवादनिर्मूलका युगप्रधानप्रवराः श्रीमज्जिनवल्लभसूरिशेखराः।

---

+ कच्छ माडवी, धर्मनाथप्रासादगतचित्कोषस्य-महाभारत-शान्तिपर्व-ताडपत्रीय-प्रति-पुष्पिकायाम्। * कविशेखरोपाध्यायश्रीमल्लब्धिमुनिवराः

सूरिवराश्चैते कदा कतममिलामण्डलं मण्डयामासुः स्वजनुषा ? केषां शिष्यवरा अभूवन् ? कथं चाभयदेवसूरीणामन्तिके श्रुताध्ययनमकार्षुश्चारित्रोपसम्पदं जगृहुश्च ? इत्याद्यारेकाकदम्बकस्य निरासस्तु साहित्याचार्य–दर्शनशास्त्री–साहित्यरत्न–साहित्यभूषण-शास्त्रविशारदोपाधिधारकोपाध्यायश्रीविनयसागरोपनिबद्धाद्राष्ट्र( हिन्दी )भाषात्मकादस्यैवोपोद्घाताद्विधेयोऽपेतासत्पक्षपातोपनेत्रैस्सहृद-यैरिति नैतद्विषये प्रयतेऽहम् ।

किन्तु यत्कैश्चित्प्रलप्यते, यदुत एतत्पिण्डविशुद्धिप्रकरणविधातारो जिनवल्लभसूरयो न खरतरगच्छीया इति तद्वितथप्रलापमात्र-मेव, यतस्तेषां स्वोक्तिसंवादकमाचार्यविजयसेनसूरिप्रसादित " पिण्डविशुद्धिविधाता जिनवल्लभगणिः खरतरोऽन्यो वा ? इति प्रश्नोऽत्रोत्तरं–जिनवल्लभगणेः खरतरगच्छसम्बन्धित्वं न सम्भाव्यते, यतस्तत्कृते पौषधविधिप्रकरणे श्राद्धानां पौषधमध्ये जेमनाक्षर-दर्शनात्कल्याणकस्तोत्रे च श्रीवीरस्य पञ्चकल्याणकप्रतिपादनाच्च तस्य सामाचारी भिन्ना खरतराणां च भिन्नेति २३ । " ( सेन प्र० उ० १, प०–४ ) एतत्प्रश्नोत्तरादन्यत्र किमपि प्रबलं प्रमाणमस्ति, परं न तदपि प्रमाणत्वेन स्वीकरणार्हं, सर्वग्राह्ययुक्तिप्रमाणविकलत्वा-त्परोत्कर्षासहिष्णुत्वेन यत्तत्प्रलपनप्रायत्वाच्च। अत एव हि गान्धीत्युपपदेन साक्षरवर्यपण्डितश्रीमल्लालचन्द्रभगवानदासेनापभ्रंशकाव्य-त्रय्युपोद्घाते " किन्त्वेतत्सुदीर्घदृष्ट्या चिन्तने न समीचीनं प्रतिभाती"त्युल्लेखं विधाय निराकृतं तस्य प्रामाण्यं सर्वथैव ।

यच्च समानामशीत्यधिके सहस्रे ( १०८० ) खरतरविरुदप्रदातृभूपश्रीदुर्लभराजा–ऽऽचार्यश्रीजिनेश्वरसूरीणां योगासम्भवे भिन्न-समयस्य हेतुत्वेनोद्घोषणं तदपि स्वस्य ग्रहिलत्वप्रकटनप्रायमेव, यतो न तस्मिन् समये नृपदुर्लभराजस्य सर्वथा जीवितत्वाभाव एवेति साधयितुं शक्यते केनाप्यैतिह्यप्रमाणेन, प्रत्युत रायबहादुर हाथीभाइ देसाइ महोदयलिखित ' गौर्जरीय ( गुजरातनो )

इतिहास ' इति नामक पुस्तकाभिप्रायतः स्पष्टतयैव सिद्धत्यशीत्यधिके सहस्रे वैक्रमेऽस्तित्वं पत्तने दुर्लभराजस्य, विशेषजिज्ञासुभिर्विलोक्यः स इतिहासग्रन्थः सं. १९७७ मुद्रितायास्तुर्यावृत्तेः १६१ पृष्ठे ।

एवं च सिद्धं समानामशीत्यधिके सहस्रे सुतरामस्तित्वं दुर्लभराजस्य पत्तने, किन्तु जिनेश्वरसूरीणामस्तित्वं जावालिपुरे ज्ञायतेऽष्टकवृत्तिप्रशस्त्यादिना तस्मिन् समये, परं सम्भाव्यते तद्वर्षाकालापेक्षिकमिति, तथा च शेषकाले नासम्भाव्यं तेषां पत्तनागमनं, एतावता खरतर +विरुदप्राप्तिसमयस्त्वशीत्यधिकं सहस्रं वैक्रमीयोऽसन्दिग्ध एव, परं तपागच्छीयैर्जगच्चन्द्रसूरीणां यावज्जीवाचाम्लतपः-

---

+ पण्डित ज्ञानसागरेणाणहिल्लपुरे लिखिताः खरतर-तपाशब्दव्युत्पत्तयो विद्वज्जनमनोविनोदायात्रोद्धृयते—

" शाब्दिकविशिष्टाः 'खरतरा' इति शब्दस्य युक्तियुक्तां नानाविधां एवंविधां व्युत्पत्तिं विदधते । तथाहि-अतिशयेन 'खराः' सत्यप्रतिज्ञा ये ते खरतराः १ । यद्वा अतिशयेन 'खराः' अनर्मनिश्छद्मधर्मव्यवहारपटवो ये ते खरतराः । यदुक्तमनेकार्थध्वनिमञ्जर्याम्-" सत्यसन्धः खरो ज्ञेयः, खरोऽपि परुषो मतः । खरो रासभ इत्युक्तो, व्यवहारे पटुः खरः ॥ १ ॥ " इति २ । 'खः' सूर्यस्तद्वद्राजन्ते निष्प्रतिमप्रतिभाप्राग्भारप्रभाभिः प्रतिवादिविद्वज्जनसंसदि ये ते खराः, अत एव तरन्ति भवाब्धिमिति तराः, खराश्च ते तराश्च खरतराः ३ । 'खानि' इन्द्रियाणि 'रः' कामः, तौ 'तस्यन्ति' वशं नयन्ति ये ते खरताः-साधुजनास्तेषां मध्ये राजन्ते-शोभन्ते ये ते खरतराः ४ । " क्वचिड्डः " इति 'ड' प्रत्ययः । 'खं' सुखं भावसमाधिलक्षणं, तस्य 'रो' रक्षणं, तत्तरन्ति-कुर्वन्ति ये ते, धातूनामनेकार्थत्वात्, खरतराः ५ । खादीना ये यतास्तेषां 'रो'भयं, तं तस्यति-विध्वंसयति यः स खरतस्तादृग्विधोऽध्वनिस्सिद्धसु(शु)द्धप्रसिद्धविशुद्धसिद्धान्तसिद्धान्तवचननिर्वचनलक्षणो येषां ते खरतराः ६ । यद्वा 'खं' संवित्, तत्र रतास्तत्पराः खरता-मुनिजनास्तान् 'रान्ति' ददति अर्थात् सम्यग्ज्ञानादि ये ते खरतराः ७ । 'खः' खड्गस्तद्वद्वा-स्तीक्ष्णाः कुमतिमतदारुविदारणे ये ते खराः, तानां-तस्कराणां जिनमतप्रद्वेषदप्यत्कुवादिजनलक्षणानां रा इव-वज्रा इव ये ते तराः, खराश्च ते तराश्च खरतराः ८ । 'खं' स्वर्गं 'रान्ति' ददति अर्थाद्-भक्तजनानां ये ते खराः, अतिशयेन खराः खरतराः ९ । इति । "

करणाद्बाणद्विपभानु( १२८५ )वर्षे तपाबिरुदप्राप्तिर्यदुद्घुष्यते तत्खपुष्पवत्सर्वथैवासम्भाव्यं, पाश्चात्यैस्तदनुयायिभिः स्वगच्छस्य कृत्रिमोत्तमत्वोद्भावनार्थं निर्दिश्यमाणानेकविधासत्यैरुद्भावितत्वात्तथाहि—

जगच्चन्द्रसूरीणां निजैरेवान्तिषद्भिः श्रीमद्देवेन्द्रसूरिभिः स्वरचितेषु धर्मरत्नप्रकरणाद्यनेकेषु ग्रन्थेषु न कुत्रापि तपाबिरुदप्राप्तेः सूचनमप्यकारि स्वगुरूणां श्रीमज्जगच्चन्द्रसूरीणां, नैतावन्मात्रमेव, अपितु जगच्चन्द्रसूरीणां गुरुत्वेऽप्यनिर्दिश्य मणिरत्नसूरिं चित्रवालकगच्छीयं देवभद्रोपाध्यायमेव निर्दिष्टवन्तस्ते महानुभावाः । यच्च "क्रमात्प्राप्ततपाचार्ये–त्यभिख्या भिक्षुनायकाः । समभूवन् कुले चान्द्रे, श्रीजगच्चन्द्रसूरयः ॥ ४ ॥" इत्येतत्कर्मग्रन्थवृत्तिप्रशस्तिपद्येन तपाबिरुदप्राप्तिप्रसाधनं जगच्चन्द्रसूरीणां तदपि खरविषाणवदसम्भाव्यमेव, यतोऽस्य पद्यस्य पाश्चात्यैस्तदनुयायिभिः ख्यातिप्राप्तमहापुरुषनाम्ना स्वमतस्य ख्यातिख्यापनाय स्वकपोलकल्पनोल्लिखितत्वसम्भावने न किमप्ययुक्तत्वमुत्पश्यामः । एतावता नहि देवेन्द्रसूरीणां कृतिरेतत्पद्यमिति सण्टङ्कः, धर्मरत्नप्रकरणवृत्त्याद्यनेकास्वपि स्वकृतिष्वेतदर्थसूचनस्याप्यकरणात्तैः । अपि च 'कर्मग्रन्थ' इत्येकस्यैव ग्रन्थस्याध्ययनादिवद्विभागरूपेषु प्रतिप्रकरणेष्वन्ते एतत्पद्यविन्यासकरणमपि कर्त्तुः स्वमतोत्तमत्वप्रत्नत्वादिख्यापनाभिनिवेशमेव व्यनक्ति ।

यत्तु सङ्घाचारोपक्रमे स्तम्भतीर्थशान्तिजिनालयस्थताडपत्रीयचित्कोषगतपञ्चनवत्यधिकद्वादशशताब्दिलिखितत्रिषष्टीयतृतीयपर्व-

---

"तान्–तस्करान् अर्थात् श्रीजैनप्रत्यनीकान् 'पान्ति' रक्षन्तीति क्विप् प्रत्ययः, तपाः १ । यदुक्तं नाममालायां "तकारः कार्थितश्चौरः, क्रोधे पुच्छे प्रकीर्त्तितः ।" इति । तपन्ति दुष्टाष्टकर्मजनितसन्तापमनुभवन्ति ये ते तपाः, तप सन्तापे, पचिनन्दिग्रहादेरयुणिनि इत्यप्रत्यये तपा–इति रूपसिद्धिः २ । यद्वा 'तः' क्रोधः, स एव 'पा' पानं येषा ते तपाः ३ । अथवा 'तं' क्रोध 'पान्ति' रक्षन्ति, न तु निन्दन्ति–प्रतिक्रामन्ति(वा ये)ते तपाः, सदा क्रोधाध्मातचित्तत्वादिति ४ । इति ।"

प्रतिलेखनपुष्पिकायाः "तपाकीयपौषधशालायां × × × तपादेवभद्रगणिः" इत्येतद्वाक्यद्वयेन बाणद्विपभानु (१२८५)–वर्षे तपोत्पत्तिप्रसाधनं तदप्यसमीचीनं, यतस्तदन्यास्त्वनेकास्त्रप्येकाधिकत्रयोदशशताब्दिपर्यवसानेऽपि बीजापुरलिखितप्रतिषु तपेत्यभिधाया अनुपलम्भात्पाश्चात्यैः सागरान्तधर्मकल्पैरामहिकैरनाभोगिकैर्वा कपोलकल्पनयोल्लिखितं सम्भाव्यते, यदि चैतत्पुष्पिकाकथनं सत्यं स्यात्तर्हि कथं देवेन्द्रसूरिभिर्द्वात्रिंशदधिकत्रयोदशशताब्दिगैः क्षेमकीर्त्तिसूरिभिश्चापि नोल्लिखितं ? इति नितरां सम्भाव्यते यत्पाश्चात्यानां सागरान्तधर्मकल्पानां कल्पनाकल्पितोऽयं पुष्पिकापाठोऽपि। किञ्चैतत्पुष्पिकागतेन "तपादेवभद्रगणि"रित्येतद्वाक्येनापि जगच्चन्द्रसूरीणां तपाबिरुदावाप्तिरकर्तृत्वदुष्टीना भवति ।

न च धर्मरत्नप्रकरणवृत्त्यादिकरणानन्तरं तपेति बिरुदस्य प्राप्तत्वात्तत्रानुल्लेखः कर्मग्रन्थवृत्तावुल्लेखश्च विहित इति वाच्यं, यतो देवेन्द्रसूरितोऽपि पाश्चात्यकालभाविश्रीक्षेमकीर्त्तिसूरिभिर्वैक्रमीये द्वात्रिंशदधिके त्रयोदशशते रचितायां बृहत्कल्पटीकायामपि तथैव चित्रवालकगच्छत्वं देवभद्रविनेयत्वमपि च स्फुटमेवोल्लिखितं श्रीजगच्चन्द्रसूरेः, यदि चोपरोक्तपुष्पिकायाः कर्मग्रन्थवृत्तिप्रशस्तिपद्यस्य च कथनमवितथं स्यात्तर्हि कथं क्षेमकीर्त्तिसूरिभिरपि नोल्लिखिता स्वस्य तपेत्यभिख्या ? ।

अन्यच्च " देवभद्रगणीन्द्रोऽपि, संविग्नः सपरिच्छदः । गणेन्द्रं श्रीजगच्चन्द्र–मेव भेजे गुरुं तदा ॥ १०३ ॥ " इति मुनिसुन्दर-सूरीयगुर्वावल्युदन्तमपि स्वसुहृद एव प्रत्ययिष्यन्ति, यत आस्तां दृष्टिपथे श्रुतिपथेऽपि नावतीर्णमेतत्कस्यापि, यच्छुद्धचारित्रोऽपि सपरिच्छदः स्वयं स्वनिश्रया क्रियोद्धारकं गुरुत्वेन भजेत्कोऽपीति सुविमृश्यं धीधनैः ।

किञ्च केनापि वैमनस्याद्यज्ञातकारणवशेन सर्वतः प्राङ्मुनिसुन्दरसूरिणैव विहाय चित्रवालकदेवभद्रीयपरम्परां मणिरत्नसूरि-

परम्परा बाणद्विपभानु(१२८५)वर्षे तपोत्पत्तिश्चोल्लिखिता, यतो मुनिसुन्दरसूरीयगुर्वावलीतः प्राङ्न कस्मिन्नपि ग्रन्थे जगच्चन्द्रसूरिभ्यस्तपा बिरुदप्राप्तिरुपलभ्यते, यैः कैरप्युद्घोषिता जगच्चन्द्रसूरिभ्यस्तपाबिरुदप्राप्तिस्ते सर्वेऽपि मुनिसुन्दरसूरितोऽर्वाक्कालीना एव, तेऽपि न सर्वेऽप्येकवचनाः, तथाहि—

मुनिसुन्दरसूरिप्रभृतयस्तु यावज्जीवाचाम्लकरणात्स्वत एव जगति तपेति ख्यातिमापन्नाः श्रीजगच्चन्द्रसूरय इति जल्पन्ति, तद्यथा—" तदादि बाणद्विपभानु(१२८५)वर्षे, श्रीविक्रमात्प्राप तदीयगच्छः । बृहद्गणाह्वोऽपि तपेति नाम, श्रीवस्तुपालादिभिरर्च्यमानः ॥ ९६ ॥ " यदि च केनापि राणकेन नृपेण वा तपेति बिरुदं दत्तमभविष्यत्तर्हि कथं नोल्लिखितमेभिः ? ।

अन्ये केचन जल्पन्ति, यदुत—आघाटपुरे राणकेन प्रदत्तं तपेति बिरुदं जगच्चन्द्रसूरिभ्यः, परं केन राणकेन प्रदत्तमिति तु अद्य यावन्न कुत्राप्युल्लेखो दृष्टिपथमायातस्तथाप्यद्यकालीना जना यद्वर्त्तमानपत्रेषु नामोल्लेखमपि कुर्वाणा दृश्यन्ते, तत्केन प्रमाणेनेति तु तत्त्वविद एव विदन्ति ।

अन्ये पुनर्वदन्ति मण्डपदुर्गे राज्ञ्या समर्पितं तपेति बिरुदं जगच्चन्द्रसूरिभ्यस्तद्यथा—" एणे आचार्य जावज्जीव आंबिलतप कर्या, बारे वरसे विहार करता मांडवगढने विषे राणी देखी तपाबिरुद दीद्धो, विक्रमात् १२ पंच्यासी वरसे " इति महेशाणा संविग्नश्रमणोपाश्रयचित्कोषस्थायां सं. १८८१ वर्षे खेडग्रामे चन्द्रविजयलिखितायां चतुर्दशपत्रात्मिकायां तपापट्टावल्यामष्टमपत्रे ।

एतद्व्यतिरिक्तं सुरतद्रङ्गे हुकमसुनिचित्कोषस्थैकस्मिन्पत्रे लिखितायां गाथायां " तत्तोमयं देवभद्दाओ " इत्युल्लेखेन देवभद्रोपाध्यायात्तपाबिरुदप्राप्तिराख्याता, न चैतत्कथनेऽनाप्तत्वमाशङ्कनीयं, तपालब्धिसागरसूरिविनिर्मितपृथ्वीचन्द्रचरित्रप्रशस्तिपाठेनाप्ये-

तस्यैवार्थसमर्थनस्योपलभ्यमानत्वात्, तथा चोक्तम्—

“ स्वच्छे श्रीचन्द्रगच्छेऽजनिषत परमाः पाठकाश्चन्द्रशाखा–विख्याता देवभद्रा सुविहितशिरसि स्फारकोटीरतुल्याः ।
आचामाम्लानि कृत्वा सततमभिरतैरागमोक्तक्रियायां, पद्मावत्या प्रदत्तं स्फुटमिह बिरुदं यैर्गृहीतं तपेति ॥ ५१ ॥ ”

अत्र तु देवभद्रायापि तपाबिरुदस्य पद्मावत्या समर्पणमुल्लिखितं, न तु केनापि राणकादिना ।

एवमुक्तप्रकारेण यथा तपापट्टावल्यादीनां पारस्परिकविरोधान्वितत्वेनाण्टसण्टजल्पनं, न तथा खरतरपट्टावल्यादीनां, विहाय च–खरतरविरुदप्रदायकप्रापकौ श्रीमदुर्लभराज–जिनेश्वरसूरी स्थानं चाणहिल्लपुरपत्तनमन्यत्र किमप्युपलभ्यते, अतः प्रायः समस्तानामपि तपापट्टावल्यादीनां कपोलकल्पनामात्रमूलकत्वेन गप्पपुराणकल्पत्वान्न कथमपि सिद्ध्यति तपागच्छीयत्वं श्रीमद्देवेन्द्रसूरीणाम् ।

चेन्मुनिसुन्दरसूरिप्रभृतिविहितकतिचित्पट्टावल्याद्याधारेण स्वीक्रियते देवेन्द्रसूरीणां तेषामेव सतीर्थ्यविनेयत्वेन क्षेमकीर्त्तिसूरीणामपि तपागच्छीयत्वं, तर्हि खरतरगच्छीयपट्टावल्याद्याधारेण स्वयमभयदेवसूर्युल्लिखितगुरुपरम्पराधारेण चाभयदेवसूरीणामपि खरतरगच्छीयत्वस्वीकरणे कथं दुःखयत्युदरं सागरान्तधर्मसङ्काशानां तपागच्छीयानाम् ? ।

एवं च सिद्धेऽभयदेवसूरेः खरतरगच्छीयत्वे सिद्धमेव तेषामौपसम्पदिकशिष्याः श्रीजिनवल्लभसूरय एवास्य प्रकरणरत्नस्य विनिर्मातार इति, किञ्च न तस्मिन्नेव समये, अपितु प्राक्पश्चाच्च द्वित्रिशताब्द्यामप्येतन्नामधेयः समकक्षिकश्च कोऽपि विद्वानभूदिति नेतिहासदृष्ट्याऽवलोक्यते, यमेतत्प्रकरणविधातृत्वेन स्वीकर्त्तु शक्यते ।

यच्च “ जिनवल्लभगणिः षट्कल्याणकाद्युत्सूत्रभाषित्वात्सङ्घाद्बहिष्कृतः ” इत्यादि यत्तत्प्रलपनं तद्भक्षितकनकबीजवदुन्मत्तत्वमेव

व्यनक्ति तत्प्रलापकस्य, यतो नोत्सूत्रं षट्कल्याणकोपदेशनं, किन्तु "गर्भस्य श्रीवर्द्धमानरूपस्य हरणं—त्रिशलाकुक्षौ सङ्क्रामणं गर्भहरणं" इति तपागच्छीयोपाध्यायजयविजयविनिर्मितकल्पदीपिकोक्त्याऽन्वर्थके गर्भापहारे "अकल्याणकभूतस्य गर्भापहारस्य" (कल्पकि०), "करोषि ? श्रीमहावीरे, कथं कल्याणकानि षट्। यत्तेष्वेकमकल्याणं, विप्रनीचकुलत्वतः ॥ १ ॥" (गुरुतत्त्वप्रदीपः), "नीचैर्गोत्रविपाकरूपस्य अतिनिन्द्यस्य आश्चर्यरूपस्य गर्भापहारस्यापि कल्याणकत्वं कथनमनुचितम्।" (कल्पसु०), "गर्भापहारोऽशुभः" (क. सु. टि.) इत्याद्यनेकविधासदुक्तियुक्तिभिरकल्याणकोपदेशनमेवोत्सूत्रं, चैत्यवास्यनुकरणपराद्धर्मसागरात्प्राक्केनाप्यकल्याणकत्वेनाप्रथनात्। धर्मसागरस्त्वनेकविधासत्प्ररूपणाप्ररूपकत्वादप्रतिमकलहकारित्वाच्च स्वगुर्वादिभिरप्यनेकशः सङ्घाद्बहिष्कृत इति सुप्रतीत एवेतिहासविदां, तस्यासत्प्ररूपणा अपि परमतार्किकन्यायाचार्यश्रीयशोविजयोपाध्यायाद्यैरपि प्रतिमाशतक–धर्मपरीक्षाप्रभृतिषु कल्पसुबोधिकादिष्वपि च भूरिशः प्रकटिताः सुप्रसिद्धाः समयविदाम्।

यथा हि धर्मसागरस्योत्सूत्रभाषणं पर्यालोचितं तत्कालीनैस्तपागच्छीयैरेवानेकैर्विद्वज्जनवरिष्ठैस्तथा जिनवल्लभसूरीणां किमपि कथनं तत्समसामयिकानां शासनधुरीणकल्पानां श्रीमद्वादिदेवसूरि–हेमचन्द्रसूरि–द्रोणाचार्यादीनां मध्यान्न केनाप्युत्सूत्रतया पर्यालोचितं, न च सङ्घबहिष्कृतत्वमप्युद्घोषितं धर्मसागरव्यतिरिक्तेनान्येन केनापि सुविहितेन, धर्मसागरस्तु जिनवल्लभसूरेः स्वर्गमनतः साधिकपञ्चशताब्द्यनन्तरभावी, तत एतावद्दीर्घकालमध्येऽनेके विद्वांसोऽभूवन्, विरचिताश्च नैके ग्रन्थास्तैः, परं न केनाप्युद्घोषितं सङ्घबहिष्कृतत्वमेतेषां, अतः स्वगुर्वादिभिरप्यसकृत्सङ्घबहिष्कृतस्योन्मत्ततया यत्तत्प्रलापकस्य च धर्मसागरस्य वचो न प्रमाणक्षमम्।

यच्चाचार्यश्रीमन्मलयगिरिविरचितजीवाभिगम–प्रज्ञापनोपाङ्गवृत्त्योः "तेन यः प्राह–सूत्रे शक्तिविशेष एव संहननमिति, तथा

न तद्ग्रन्थः 'सुत्ते सत्तिविसेसो, संघयण' मिति, स भ्रान्तः, मूलटीकाकारेणापि सूत्रानुयायिना संहननस्यास्थिरचनाविशेषात्मकस्य प्रतिपादितत्वात्, यच्चैकेन्द्रियाणां सेवार्त्तसंहननमन्यत्रोक्तं तट्टीकाकारेण समाहितं–औदारिकशरीरत्वादुपचारत इदमुक्तं द्रष्टव्यं, न-तु तत्त्ववृत्त्येति, यदि पुनः शक्तिविशेषः स्यात्ततो देवानां नैरयिकाणां च संहननमुच्येत, अथ च ते सूत्रे साक्षादसंहननिन उक्ता, इत्यलं उत्सूत्रप्ररूपकविस्पन्दितेषु " इति कथनमुपलभ्यते तदपि विचारं न क्षमते, यतः पूर्वं तावदेतत्कथनं श्रीमन्मलयगिर्याचार्याणा-मस्ति न वेत्यपि नासन्दिग्धं, " सुत्ते सत्तिविसेसो, संघयण " मित्यत्र ग्रन्थेऽस्य वृत्तावपि चैवकारस्य सूचनमात्रेऽप्यसति " तेन यः प्राह–सूत्रे शक्तिविशेष एव संहननमिती"त्यत्र बलात्कारेणैवैवकारस्य कथनात्। यदि च " सुत्ते सत्तिविसेसो, संघयण "-मित्येतद्वाक्येनास्थिरचनाविशेषात्मकस्यासंहननत्वं वक्तुमिष्टमभविष्यत्तर्हि तत्र ग्रन्थे " सुत्ते सत्तिविसेसच्चिय संघयण " मित्येवं वक्तव्यं स्यात्, न चैवमुक्तं, ततः " सुत्ते सत्तिविसेसो, संघयण " मित्यनेनैवकारविकलपाठेन कथं 'सूत्रे शक्तिविशेष एव संहननं' यद्वा 'अस्थिरचनाविशेषात्मकस्य सहननत्वाभाव' इति साधयितुं शक्यते ? न कथमपि, तथा च श्रीमन्मलयगिरिसङ्काशाः समर्थ-टीककत्वेन प्रख्याताः प्रामाणिकाचार्याः कथमेवं नितान्तमसत्यं प्रमाणविकलं च वदेयुः ? न कथमपि । किञ्च–स्वयमपि मलयगिर्याचार्या जिनवल्लभसूरिप्रणीतषडशीतिकावृत्तावेताँच्छिष्टाचार्यत्वेन जल्पन्ति, तथा च तद्ग्रन्थः–" इह हि शिष्टाः क्वचिदिष्टे वस्तुनि प्रवर्तमानाः सन्त इष्टदेवतास्तवाभिधानपुरस्सरमेव प्रवर्त्तन्ते, न चायमाचार्यो न शिष्ट इति " एवं चैकत्र शिष्टाचार्यत्वेनोक्त्वा पुनरन्यत्र तानेवोत्सूत्रप्ररूपकत्वेन कथनरूपविभिन्नवाक्यता सर्वथैवासम्भावनीया तादृशां समर्थप्रामाणिकाचार्याणां, प्रामाणिकत्वे लाञ्छनरूप-त्वात् । अथ चोपलभ्यते चतुर्दशशताब्द्यन्तभागपर्यवसानलिखितास्वपि प्रतिकृतिष्वेष एव पाठः, अतोऽत्र किं तत्त्वमिति तु तत्त्वविद्वेद्यं,

उपक्रमे शक्त्यात्मकसंहननस्य सूत्रोक्तत्वम् ।

परमेतत्तु सुतरां निष्टङ्कितं, यदुत–" सुत्ते सत्तिविसेसो, संघयण"मिति वाक्यं न सूत्रे शक्तिविशेषात्मकसंहनननिषेधकं नापि च 'सूत्रे शक्तिविशेष एव संहनन'मिति ख्यापकमपि, अपितु 'सूत्रे शक्तिविशेषः संहननमस्ती'त्येतावन्मात्रस्यैवार्थस्य द्योतकं, तत्तु जिनवल्लभसूरितोऽपि प्रागनेकैः प्राचीनैः प्रामाणिकैश्चाचार्यपुरन्दरैः स्पष्टतयैव प्रतिपादितमस्ति, तथाहि—

" इह चेत्थम्भूतास्थिसञ्चयोपमितः शक्तिविशेषः संहननमुच्यते, न त्वस्थिसञ्चय एव, देवानामस्थिरहितानामपि प्रथमसंहनन-युक्तत्वात् । " ( हारि० आ. वृ० पत्र ३६७–१ ) स्पष्टमुक्तमत्र ग्रन्थे पूज्यश्रीहरिभद्रसूरिमिश्रैः शक्तिविशेषस्य संहननत्वम् ।

" संहननम्–अस्थिसञ्चयः, वक्ष्यमाणोपमानोपमेयः शक्तिविशेष इत्यन्ये, × × × शक्तिविशेषपक्षे त्वेवंविधदार्वादेरिव दृढत्वं संहननमिति । " ( स्थानाङ्ग वृत्ति, अ. ६, प. ३३९, वल्लभवि. मुद्रित )

तथा " दिव्वेणं संघातेणं–दिव्येन स्वर्गसम्बन्धिना प्रधानेनेत्यर्थो, वर्णादिना युक्त इति गम्यते, सङ्घातेन–संहननेन वज्रर्षभना-राचलक्षणेन " ( स्था. वृ. अ. ८ प. ३९९, वल्लभवि. मु. )

एवमेव " दिव्वेणं–देवोचितेन 'सं(घयणेणं)घाएणं'ति संहनेन वज्रर्षभनाराचेनेत्यर्थः । " ( औपपातिकसूत्रवृत्ति पत्र ५० )

तदेवं निर्दिष्टैः प्रमाणैर्द्वाभ्यामपि सूरिशेखराभ्यां स्पष्टमुररीकृतं शक्तिविशेषः संहननमिति, नैतावन्मात्रमेव, किन्तु " यत्तु प्रागेकेन्द्रियाणां सेवार्त्तसंहननमभ्यधायि तदौदारिकशरीरसम्बन्धमात्रमपेक्ष्यौपचारिकं, देवा अपि यदन्यत्र प्रज्ञापनादौ वज्रर्षभ-नाराचसंहननिन उच्यन्ते तदपि गौणवृत्त्या " इत्यनेन श्रीजीवाभिगमवृत्तिपाठेन स्वयमपि मलयगिर्याचार्याः शक्तिविशेषं संहनन-तया स्वीकुर्वन्ति । एवं च श्रीजिनवल्लभसूरिभ्यः पुरोभाविहरिभद्रसूर्यभयदेवसूरिप्रभृतिभिः सर्वमान्यप्रामाणिकाचार्यैः स्वयं मलयगिर्या-

चार्यैरपि च यदुररीकृत शक्तिविशेषः संहननमिति तर्हि जिनवल्लभसूरेः " सुत्ते सत्तिविसेसो, संघयण " मिति कथनं कथमुत्सूत्रं भवितुमर्हति ? नैव कथमपि ।

एतत्त्वौपचारिकं शक्तिविशेषः संहननं, नतु तत्त्ववृत्त्येति चेत्सत्यं, किन्तु को जल्पति " सुत्ते सत्तिविसेसो, संघयण " मित्य-नेन पाठेनानौपचारिकं तत्त्ववृत्त्या वा शक्तिविशेषः संहननं सूत्रे प्रोक्तमिति ? एवकारस्यात्र सर्वथाऽप्यभावात् ।

एवं च सुतरां सिद्धं, यदुत–" सुत्ते सत्तिविसेसो, संघयण " मिति कथनं नोत्सूत्रम्, तथा च तत्प्रणेतारो जिनवल्लभसूरयोऽपि नोत्सूत्रप्ररूपकाः, असिद्धे च तेषामुत्सूत्रप्ररूपकत्वे दूरापास्तमेव सङ्घाद्बहिष्कृतत्वमपि, तत्समसामायिकैः प्रौढातिप्रौढैरप्याचार्या-दिकैरनुच्चारितत्वात् । यच्च जिनवल्लभसूरेः स्वर्गप्राप्तितः साधिकपञ्चशताब्द्यनन्तरभाविधर्मसागराद्यैर्जल्पितं तत्त्वस्योत्सूत्रप्ररूपकत्वं सङ्घाद्बहिष्कृतत्वं चाच्छादयितुमेव, तत्समसामयिकैरनेकैर्विद्वद्भिः स्वस्वग्रन्थेषु तथाविधतया ख्यापितत्वात्सुप्रतीतमेव सूत्रोत्तीर्णवादित्वं सङ्घबहिष्कृतत्वं चापि तस्य ।

एवं च सामायिकशब्दस्य " सामाइयं नाम सावज्जजोगपरिवज्जणं निरवज्जजोगपडिसेवणं चे "ति शास्त्रीयव्याख्यानमनादृत्य स्वाभिनिवेशपोषणाय " सामाइयं नाम निरवज्जजोगपडिसेवणं सावज्जजोगपरिवज्जणं चे "ति विपरीतव्याख्यानं, अपर्वस्वपि पौषधो-पवासो विधेय एवेत्याग्रहात् " पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ, न प्रतिदिवसाचरणीयौ " इत्येतत्पाठप्रान्त-वर्त्तिनः " न प्रतिदिवसाचरणीयौ " इत्येतद्वाक्यस्य पर्वदिनेषु नियततया तदन्यघस्रेषु चानियततया पौषधोपवासविधेयतार्थख्यापना-यावश्यकवृत्त्यादिनाम्ना " दिवैव ब्रह्मचारी, न तु रात्रौ " इत्येवंविधस्य स्वकपोलकल्पनाकल्पितपाठस्य परिकल्पनं, अनादितोऽपि

पाक्षिकं चतुर्दश्यामेवेति स्वाभिमतार्थसिद्धये ठाणाप्रकरणवृत्तेः "तवसेण य पक्खियाईणि वि चउद्दसीए आयरियाणि" इत्येतत्पाठगत-"पक्खियाईणी"ति वाक्यस्थाने "चाउम्मासियाणी"त्येवंरूपपाठपरिवर्त्तनं, तथा "गर्भस्य श्रीवर्द्धमानरूपस्य हरणं-त्रिशलाकुक्षौ सङ्क्रामणं गर्भहरणं" इत्येतद्युक्तियुक्तशास्त्रीयार्थव्यञ्जकस्य, न तु हरणमात्रार्थव्यञ्जकस्य, गर्भापहारस्याकल्याणकभूततया अतिनिन्द्याश्चर्यरूपकल्याणकत्वकथनानुचिततया वा व्याकृतिश्चेत्याद्यनेकविधासदुक्तयस्तेषामेवास्यमलङ्कुर्वाणाः शोभन्ते, नतु सूत्रानुसारिणां श्रीमद्धरिभद्राचार्याभयदेवसूरिप्रभृतिव्याख्यातवीरवरश्रीमद्वर्द्धमानजिनत्रिशलाकुक्ष्यागमनरूपतीर्थकरभवानां "कल्लाणफला य जीवाण"-मिति पञ्चाशकोक्तकल्याणकलक्षणोपेतकल्याणकपञ्चकस्थत्रिशलाकुक्षिगर्भाधानलक्षणगर्भापहाराकल्याणकावादिनामित्यलमतिचसूर्या सागरानुकारिप्रेममानादिभिः ।

ग्रन्थोऽयमतीवोपयोगी रत्नत्रयाराधनोद्युक्तानां श्रमणानां श्राद्धानामपि च, यतो न पिण्डविशुद्धिज्ञानमन्तरा सुलभं तदाराधनं, तच्चैदंयुगीनानामल्पमेधाऽऽयुष्काणां सत्त्वानामनेन प्रकरणेनावाप्तुं सुकरं, स्वल्पप्रमाणत्वादस्य । अत एव ह्यनेकैराचार्यादिकैर्वृत्ति-दीपिकाऽवचूर्ण्याद्यैर्नानाभिधानैर्गीर्वाणभाषायां लोकभाषायामपि टबार्थबालावबोधाद्यभिधानैरनेके व्याख्याग्रन्था विरचिताः समुपलभ्यन्ते, तेषु श्रीचन्द्रसूरिप्रणीता वृत्तिः सर्वतोऽधिकपरिमाणा, या प्राङ्मुद्रिता, परं त्रुटितपाठत्वादिना नालं सा सम्यगर्थावबोधाय सर्वेषां, अतोऽल्पमेधसामपि सुखावबोधाय श्रीचन्द्रसूरीणामेवान्तिषद्भिः पाक्षिकसूत्रविवरण-पञ्चाशकचूर्णिप्रभृतिशास्त्रप्रणेतृभिः श्रीमद्यशोदेवसूरिभिः सन्दब्धा नातिविस्तरा लघ्वी क्लिष्टाऽपि वा, ततोऽप्यतिलघ्वी सुस्पष्टार्थबोधिका चापि चान्द्रकुलीन-श्रीप्रभाचार्यान्तेवासिमाणिक्यप्रभसूरिवरविनेयरत्न-श्रीमदुदयसिंहसूरिवरविनिर्मिता दीपिका च, एतद्व्याख्याद्वयोपेतस्यैतत्प्रकरणरत्नस्य प्रकाश-

नेच्छा प्रादुरभून्मुनिनिध्यङ्केन्दु ( १९९७ )वत्सरे मम, तदैव च मोहमय्यामवाप्तपुण्यपत्तनीयभाण्डारकरइन्स्ट्रीच्यूटाख्यचित्कोषसत्कप्रत्याधारेण कारिता मुद्रणार्हा प्रतिः, तां 'भ' संज्ञत्वेन नियुक्ताऽत्र मया ।

ततः कार्यान्तरव्यग्रत्वादिसंयोगवशात्कतिचिद्वर्षानन्तरमारब्धोऽस्य मुद्रणप्रयासस्तत्र च संशोधनकर्मणि निम्ननिर्दिष्टाः प्रतय उपयुक्ततां नीता मया, पूर्वं तावत्पत्तनीयश्रेष्ठिपाटकस्थचित्कोषसत्कताडपत्रीयप्रतिद्वयाधारेणावलोकिता मुद्रणार्हा प्रतिः, ततो मुद्रणप्रारम्भकाले निर्देक्ष्यमाणं पुस्तकपञ्चकं समासादितं मया, तत्र—

१ 'ह' संज्ञिका प्रतिर्वटपद्रनगरस्थानन्दज्ञानमन्दिरसंस्थापितवयोवृद्धानवरतविहारप्रतिबद्धलक्ष्यश्रीमद्धंसविजयमुनिपुङ्गवशास्त्रसङ्ग्रहसत्का प्राचीना शुद्धप्राया च ।

२ 'क' संज्ञिका, साऽप्युपरोक्तज्ञानमन्दिरावस्थापितानेकत्रीयज्ञानभाण्डागारव्यवस्थितिविधायकप्रवर्त्तकश्रीमत्कान्तिविजयमहाशयशास्त्रसङ्ग्रहसत्का अर्वाचीना नात्यशुद्धा। एतत्प्रतिद्वयमप्यनवरतशास्त्रोद्धारैकबद्धकक्ष साक्षरवर्यश्रीमत्पुण्यविजयमुनिवरानुग्रहादवाप्तम् ।

३ 'य' संज्ञिका, परमपूज्यसुविहितक्रियानिष्ठखरतरगच्छविभूषणमहच्छासनप्रभावकक्रियोद्धारकश्रीमन्मोहनमुनीशविनेयावतंसोग्रतपस्विवर्त्तमानखरतरगणसंविग्नशाखीयाद्याचार्यश्रीजिनयशस्सूरीश्वरभांडागार-योधपुरसत्का नातिप्राचीना नात्यशुद्धा ।

४ 'प' संज्ञिका, पत्तनीयश्रीसङ्घभाण्डागारसत्का, प्रवर्त्तकश्रीमत्कान्तिविजयमुनिवरविनेयविनेयत्रयोवृद्धश्रीजसविजयमुनिमहाशयद्वारा सम्प्राप्ता प्राचीना शुद्धप्राया च ।

५ ‘ अ ’ संज्ञिका, बीकानेरवास्तव्येतिहासतत्त्ववेत्ता श्रीमान् अगरचन्द्रजी नाहटासत्का प्राचीना शुद्धा च ।

दीपिकायास्तु मुद्रणार्हा प्रतिमैथैव संवन्नेत्रनिध्यङ्केन्दु( १९९२ )वर्षे मदीयगुरुदेवस्य छत्रछायायां स्थितेन मोहमय्यामनन्तनाथ-जिनालयस्थचित्कोषीयप्रत्याधारेण निर्मिता, ततः परं संशोधनकार्ये निर्देक्ष्यमाणं प्रतिपञ्चकमुपयुक्ततां नीतं मया, तथाहि—

१–२ ‘ ह–क ’ संज्ञिके, एते द्वेऽपि प्रती क्रमशः प्राङ्निर्दिष्टानन्दज्ञानमन्दिरवटपद्रनगरस्थश्रीमद्धंसविजय–कान्तिविजयमुनि-मतल्लिकयोः शास्त्रसङ्ग्रहसत्के प्राचीने शुद्धप्राये श्रीमत्पुण्यविजयमुनिवरानुग्रहात्सम्प्राप्ते ।

३ ‘ म ’ सज्ञिका, मोहमयीस्थमहावीरजिनालयगतश्रीजिनदत्तसूरिज्ञानभाण्डागारसत्का, अर्वाचीना नात्यशुद्धा, मदीयविद्यमाना-चार्यश्रीमज्जिनरत्नसूरिवराणामुपाध्यायश्रीमल्लब्धिमुनिवराणां चानुग्रहादवाप्ता ।

४ ‘ प ’ संज्ञिका, पत्तनीयश्रीसङ्घभाण्डागारसत्का वयोवृद्धश्रीजसविजयमुनिवरानुग्रहात्सम्प्राप्ता ।

५ ‘ अ ’ सञ्ज्ञिका, अगरचन्द्रजी नाहटाद्वारा समासादिता ।

एतेषां सर्वेषामपि पुस्तकप्रेषणेन मामनुगृहीतृमहाशयानां चिरं कृतज्ञोऽस्मि, विशेषतः श्रीमत्पुण्यविजयमुनिमहाशयानां, यैर्लिखन-समनन्तरमेव निस्सङ्कोचतयाऽविलम्बेन च स्वायत्तभाण्डागारीयप्राचीनतमशुद्धप्रतिप्रेषणेनातीव सौहार्दभावो मुहुर्व्यञ्जितः ।

एवं च वृत्तिदीपिकयोर्द्वयोरपि विभिन्नकालीनप्रतिपञ्चकपञ्चकाधारेण सावधानतया विहितेऽपि संशोधनायासेऽत्र निबन्धे याः काश्चन स्खलनास्त्रुटयो वा दृष्टिपथमवतरेयुस्ताः सम्मार्जनीयाः प्रकृतिकृपार्द्रहृदयैर्धीधनैर्मयि कृपां विधायेत्यभ्यर्थनापुरस्सरं—

शान्ताय दान्ताय जितेन्द्रियाय, धीराय वीराय मुनीश्वराय ।
सद्ध्यानज्ञानादिगुणाकराय, भक्त्या नमः श्रीमुनिमोहनाय ॥ १ ॥

इति परमगुरुनमनरूपमङ्गलमाचरंश्च विरमाम्येतदल्पोपक्रमात् ।

वि. सं. २०१० पौष कृ. १० बुधे
कच्छमाण्डवी

लि० अनुयोगाचार्यश्रीकेशरमुनिगणिवरविनेयो-
बुद्धिसागरो गणिः

संवत्खेलानभोयुग्मे, वैक्रमे माण्डवीपुरे । बुद्ध्यब्धिना हि सन्दब्धो, गणिनाऽयमुपक्रमः ॥ १ ॥

ॐ अर्हं नमो जिनाय

नमो नमः श्रीमज्जिनदत्त-कुशल-मोहन-यश -केशरपादपद्मेभ्यः

श्रीमन्मोहन-यशःस्मारकग्रन्थमालायां—

परमसुविहितशिरश्शेखरायमाण-**श्रीमत्खरतरगच्छ**प्रतिष्ठासम्प्रापक-नवाङ्गवृत्तिकारक-सुविहितसूरिपुरन्दर-**श्रीमदभयदेवसूरि**गृहीतोपसम्पच्छिष्य-सुविहित-चक्रचूडामणि-कविचक्रवर्त्ति-**श्रीमज्जिनवल्लभसूरि**शेखरप्रविनिर्मित, परमसुविहित-सुगृहीतनामधेय-**श्रीमद्यशोदेवसूरि**सूत्रितया लघुवृत्त्याख्यया व्याख्यया विभूषितं, श्रीमच्चान्द्रकुलाम्बरनभोमणि-श्रीमन्माणिक्यप्रभाचार्यविनीतविनेय-**श्रीमदुदयसिंहसूरि**सन्दृब्धया दीपिकया सनाथीकृतञ्च

# पिण्डविशुद्धि-प्रकरणम् ।

**यदुदितलवयोगाद्देहिनः स्युः कृतार्था-स्तमिह शुभनिधानं वर्द्धमानं प्रणम्य ।**
**स्वपरजनहितार्थं पिण्डशुद्धेर्विधास्ये, जिनपतिमतनीत्या वृत्तिमल्पां सुबोधाम् ॥ १ ॥**

तत्र चार्हत्प्रणीतसमयसम्पर्कावदातमतिजलधिर्भगवान् श्रीजिनवल्लभगणिर्दुःषमाकालदोषादत्यन्तं हीयमानायुर्बुद्ध्यादीन् सम्प्रतिकालसाध्वादीनवलोक्य तदनुग्रहार्थं विस्तरवत् पिण्डैषणाध्ययनसारमादाय सङ्क्षिप्ततरं पिण्डविशुद्ध्याख्यप्रकरणं चिकीर्षुरादावेव विघ्नव्रातनिरासार्थं शिष्टसमयपरिपालनार्थं च इष्टदेवतास्तुतिरूपमत्यन्ताव्यभिचारिभावमङ्गलं श्रोतृजनप्रवृत्त्य-

र्थमभिधेयादि च प्रतिपादयन्निमां गाथामाह—

( दीपिकायां मङ्गलाचरणादिः– )

तं नमत श्रीवीरं, यस्माच्चारित्रभूपतिर्जगति । बाह्यान्तरवैरिजयात्, क्षमाधरैः सेव्यतेऽद्यापि ॥ १ ॥
सुविहितसूत्रधारः, स जयति जिनवल्लभो गणिर्येन । पिण्डविशुद्धिप्रकरण–मकारि चारित्रनृपभवनम् ॥ २ ॥
तस्मिन्विवरणदीपं, दीप्रमतिस्नेहभाजनमदाद्यः । सोऽपि परोपकृतिरतः, सूरिर्जीयाद्यशोदेवः ॥ ३ ॥
तद्विवरणप्रदीपा–न्मया पदार्थाभिलाषिणा तत्र । मन्दमतिनेयमात्म–प्रबुद्धये दीपिकोद्ध्रियते ॥ ४ ॥

तत्र विशुद्धसिद्धान्तसुधासारणिः श्रीजिनवल्लभगणिः सङ्क्षिप्तरुचीनामनुग्रहार्थं पिण्डैषणाऽध्ययनसारार्थं सङ्गृह्य यतीनामाहारदोषोद्धरणं पिण्डविशुद्धिप्रकरणं चिकीर्षुरादावेव कृताभीष्टनमस्कारां सूचिताभिधेयादित्रितयसारां गाथामाह—

**देविंदविंदवंदिय–पयारविंदेऽभिवंदिय जिणिंदे । वोच्छामि सुविहियहियं, पिंडविसोहिं समासेणं ॥१॥**

व्याख्या—' देवा ' भवनपत्यादय ' इन्द्राश्च ' चमरादयो, देवानामिन्द्रा देवेन्द्रास्तेषां 'वृन्दानि' निकुरुम्बाणि देवेन्द्रवृन्दानि, तैर्वन्दितानि–प्रणतानि स्तुतानि च ' पदारविन्दानि ' चरणकमलानि येषां ते देवेन्द्रवृन्दवन्दितपदारविन्दास्तान् जिनेन्द्रानिति योगः। किमित्याह—'अभिवन्द्य' कुशलमनोवाक्कायैः प्रणम्य। 'जिनेन्द्रान्' रागाद्यान्तरदुर्वारवैरिवारविजयाज्जिना-अपगतघनघातिकर्मचतुष्टयाः केवलिनस्ते च सामान्या अपि स्युरतोऽर्हत्परिग्रहार्थमिन्द्रग्रहणं, ततश्च जिनानामिन्द्राः–केवलित्वे सति चतुस्त्रिंशदतिशयरूपपरमैश्वर्यवन्तस्तीर्थङ्करा जिनेन्द्रास्तानित्यनेन मङ्गलमुक्तं, एतच्च स्वर्गापवर्गावन्ध्य-

कारणसम्यग्ज्ञानक्रियाहेतुत्वाच्छ्रेयोभूतेऽस्मिन् प्रकरणे प्रवृत्तौ विघ्नसम्भवात्तदपोहार्थमभिहितमिति । अभिवन्द्य किं कर्तव्यमित्याह-' वोच्छामि 'त्ति ' वक्ष्यामि ' भणिष्यामि पिण्डविशुद्धिमिति योगः । किं विशिष्टामित्याह-सुविहितहितां, शोभनं विहितं अनुष्ठानं येषां ते सुविहिताः-सुसाधवस्तेषां हिता-उपकारित्वात् पथ्या-सुविहितहिता, तां । ' पिंडविसोहिं 'ति पिण्डविशुद्धिं, इह पिण्डः समयसञ्ज्ञयाऽशनादिचतुर्विधाहारः परिगृह्यते, तस्य विशुद्धि-र्विविधरूपैरुद्गमादिभिः प्रकारैः शोधनं पिण्डविशुद्धिस्तां, प्रकरणं चाभिधेयसम्बन्धात्तरङ्गवत्यादिवत्तथोच्यते । अनेन चाभिधेयमभिहितं, तदभिधानाच्चाभिधानाभिधेयलक्षणः सम्बन्धोऽप्युक्तो वेदितव्यः । एवं च सम्बन्धाभिधेयशून्यशास्त्रप्रवृत्तिपरिहारिणां श्रोतॄणामत्र प्रवृत्तिः कृता भवतीति । ननु पूर्वाचार्यैरेव पिण्डनिर्युक्त्यादिग्रन्थेषु साऽभिहितेति किं तया पिष्टपेषणन्यायतुल्ययाऽभिहितया ? इत्याशङ्क्याह—' समासेन ' सङ्क्षेपेण । अयमभिप्रायः-पूर्वाचार्यैर्विस्तरेण सा प्रोक्ता, अहं पुनर्मन्दमतिसत्त्वानुग्रहार्थं सङ्क्षेपेण तां वक्ष्यामीति । अनेन चाचार्यः प्रकरणकरणे आत्मनः प्रयोजनं दर्शयति, यतः प्रयोजनं विना नाज्ञोऽपि क्वापि प्रवर्त्तते । तथा सङ्क्षिप्तप्रकरणस्य सुखेन पठनादयः क्रियन्त इति विस्तीर्णग्रन्थपठनाद्यसमर्थाः शिष्या अत्र प्रवर्तिता भवन्तीति । शिष्यप्रयोजनं तु पिण्डदोषपरिज्ञानादिकं स्वयमभ्यूह्यमिति गाथार्थः ॥ १ ॥

पिण्डविशुद्धिं वक्ष्यामीत्युक्तं । ततश्च यैर्दोषैर्विरहितस्य पिण्डस्य विशुद्धिर्भवति, तान् विवक्षुरिमां प्रस्तावनागाथामाह-

दी०—देवेन्द्रवृन्दवन्दितपादारविन्दान् जिनेन्द्रानभिवन्द्येत्यभीष्टसिद्धिदान्नमस्कृत्य वक्ष्यामि ' सुविहितहितां ' सुसाधूपकारिणीं पिण्डविशुद्धिं, पिण्डोऽत्र समयसंज्ञया चतुर्विधोऽशनाद्याहारस्तस्य विशोधिं-विविधं शोधनमित्यभिधेयं, तस्मादभिधा-

नाभिधेयलक्षणः सम्बन्धोऽप्यूह्यः । ननु पूर्वं पिण्डनिर्युक्त्यादिग्रन्थेष्वपि सा भणिताऽस्ति, किमनयेत्याह–समासेनेति प्रयोजनं, तच्च कालदोषाद्विस्तीर्णशास्त्रपठनाद्यसमर्थसत्त्वानुग्रहादनन्तर–परम्परभेदं ज्ञेयमिति गाथार्थः ॥ १ ॥

अथ जीवानां शिवसुखावाधिपिण्डदोषभणनेनैव प्रस्तावयन्नाह—

**जीवा सुहेसिणो तं, सिवम्मि तं संजमेण सो देहे । सो पिंडेण सदोसो, सो पडिकुट्ठो इमे ते य ॥२॥**

व्याख्या—'जीवाः' प्राणिनस्ते किमित्याह–' सुखैषिणः ' साताऽभिलाषिणः, उक्तं च—" **सव्वे वि सुक्खकंखी, सव्वे वि हु दुक्खभीरुणो जीवा । सव्वे वि जीवियपिया, सव्वे मरणाउ वीहंति ॥ १ ॥**"त्ति । ' तं ' ति पुनः शब्दार्थस्य गम्यमानत्वात्, तत्पुनः सुखं स्वाभाविकं निरुपममनन्तं च शिव एव–सर्व्वकर्माभावलक्षणमोक्ष एव, यदुक्तं—"**नवि अत्थि माणुसाणं, तं सोक्खं नवि य सव्वदेवाणं । जं सिद्धाणं सोक्खं, अव्वाबाहं उवगयाणं ॥१॥**" संसारि[क]सुखं तु सुखमेव न भवति, विपर्यासरूपत्वात्, दुःखप्रतीकारमात्रस्य सुखबुद्ध्या ग्रहणात् । भणितं च—"**तृषा शुष्यत्यास्ये पिबति सलिलं स्वादु सुरभिः, क्षुधार्त्तः सन् शालीन् कवलयति मांसादिफणितान् । प्रदीप्ते रागाग्नौ दहति तनुमाश्लिष्यति वधूं, प्रतीकारो व्याधेः सुखमिति विपर्यस्यति जनः ॥१॥**" इति । 'तं'ति उक्तन्यायात् तं पुनः शिवं जीवाः प्राप्नुवन्ति, केनेत्याह–संयमेन, " पञ्चाश्रवाद्विरमणं, पञ्चेन्द्रियनिग्रहः कषायजयः । दण्डत्रयविरतिश्चेति, संयमः सप्तदशभेदः ॥१॥ " इति शास्त्रान्तर[नन्दीवृत्ति]प्रसिद्धेन " **पुढवि-दग-अगणि-मारुय–वणस्सइ-यि-ति-चउ-पणिंदि ९ अजीवे १० । पेहो ११ प्पेह १२ पमज्जण १३–परिट्ठवण १४ मणो १५ वई १६ काए**

य'त्ति 'दाने' वितरणे गृहस्थस्य ये दोषा यतिसत्कचरणघातादयः स्युस्तान्वक्ष्ये, च शब्दो दोषानुकर्षणार्थः, तथा च वक्ष्यति-'जइणो चरणे'त्यादि ६। तथा 'जहा पुच्छ'त्ति 'यथा' येन प्रकारेण देशाद्यनुचित+भक्तदानादिलक्षणेन 'पृच्छा' प्रश्नः सम्भवति, वक्ष्यति च-'देसाणुचियं बहुदव्व'मित्यादि ७। तथा 'छलण'त्ति 'छलना' साधोर्भिक्षार्थं प्रविष्टस्य तथाविधकारणैरनेषणीयाऽऽशङ्काऽभावादशुद्धभक्तग्रहणरूपा व्यंसना यथा स्यात्, वक्ष्यति च-'थोवंति न पुठ'मित्यादि ८। तथा 'सुद्धी य'त्ति 'शुद्धिः' कथञ्चिदशुद्धपिण्डग्रहणेऽपि निर्दोषता यथा स्यादेतद्विपक्षत्वाच्चाशुद्धिर्यथा स्यात्, च शब्द उक्तसमुच्चये। 'तह वोच्छं'ति। 'तथा'तेन-शुद्धग्रहणपरिणामादिना प्रकारेण 'वक्ष्ये' अभिधास्ये, वक्ष्यति च-'आहाकम्मपरिणओ' इत्यादि ९। इति द्वारगाथा समासार्थः ॥ ८ ॥ सम्प्रत्याद्यद्वारं व्याचिख्यासुराह—

दी०—'तत्' आधाकर्म, पुनर्विशेषोक्तौ, यद्भक्तादि १, यस्य कृते कृतं स्यात् २, यथा-यैः प्रकारैः ३, यादृशं-यत्तुल्यं ४, अशने च तस्य ये दोषाः ५, दाने दातुश्च ये [दोषाः] ६, यथा पृच्छा-बाह्याचरणदर्शनात्प्रश्नः ७, छलना अनेषणीयाशङ्काऽभावादशुद्धग्रहणे ८, शुद्धिश्च-सदोषपिण्डग्रहणेऽपि निर्दोषता ९, तथा वक्ष्ये इति गाथार्थः ॥ ८ ॥ अथाद्यद्वारमाह—

**असणाइचउब्भेयं, आहाकम्ममिह बेंति आहारं। पढमं चिय जइजोग्गं, कीरंतं निट्ठियं च तहिं ॥९॥**

व्याख्या—'असणाइचउब्भेयं' ति 'अशनं' भोजनं 'आदिः' प्रथमं येषां पानखादिमस्वादिमानां ते तथा,

+ "०तदानादिभक्तलक्षणेन" अ. य.। "तदानादिलक्षणेन" ह. क. प.।

चिनोति–अनुभाग-निधत्तरूपाभ्यां, उपचिनोति–प्रदेश-निकाचनारूपाभ्यां, कः ? कार्मिकभोजी साधुः, भोजीति तच्छीलार्थ इन् कारणे तद्धोक्तृनिरासार्थः। किमिदं स्वमनीषिकयोच्यते ? ×इत्याह–यद्भणितं सुधर्मस्वामिना 'भगवत्यां' पञ्चमाङ्गे स्फुटं, आलापकार्थ एवात्रोक्त इति गाथार्थः। एवमात्मनः कर्मबन्धादात्मकर्म ॥ ७ ॥

उक्तो नामचतुष्टयार्थः, साम्प्रतं तदेव नवभिर्द्वारैर्विशेषेणाह—

**तं पुण [1]जं [2]जस्स [3]जहा, [4]जारिसं [5]असणे य तस्स जे दोसा। [6]दाणे य जहा पुच्छा, छलणा सुद्धी य तह वोच्छं ॥८॥**

व्याख्या—तदाधाकर्म्म, पुनः शब्दो विशेषणार्थः, यत्किञ्चिदशनादिकमुच्यते, तदहं वक्ष्ये इति गाथाऽन्त्यक्रियया योगः, एवमन्यत्रापि, वक्ष्यति च–'असणाइचउब्भेय'मित्यादि १। तथा यस्य निमित्तं कृतं तत्स्यात्तं वक्ष्ये, वक्ष्यति च–'साहम्मियस्से'त्यादि २। तथा 'जह'त्ति यथा–यैः प्रकारैः प्रतिषेवणादिभिस्तत्स्याचान्वक्ष्ये, वक्ष्यति च–'पडिसेवणे'त्यादि ३। तथा 'यादृशं' यस्य वस्तुनस्तुल्यं तत्स्यात्, भणिष्यति च–'वंतुच्चारसुरे'त्यादि ४। तथा 'अशने' भोजने तस्याधाकर्म्मदोषवतः पिण्डस्य येऽतिक्रमादयो दोषाः स्युः, वक्ष्यति च–'कम्मग्गहणे'त्यादि ५। तथा 'दाणे

---

कश्चिद्दिनमेकं कश्चिद्द्वयं कश्चित्त्रयं, अनुभावेन-स्निग्धमधुरत्वलक्षणेन कश्चिदेकगुणानुभावः कश्चिद्द्विगुणानुभावः कश्चित्त्रिगुणानुभावः, प्रदेशैः–कणिकादिद्रव्यरूपैः कश्चिदेकप्रसृतिप्रमाणः कश्चिद्द्विप्रसृतिप्रमाण अपरस्त्रिप्रसृतिप्रमाणः, एवं कर्मापि किञ्चिज्ज्ञानमावृणोति किञ्चिद्दर्शनं किञ्चित्सुखदुःखे जनयतीति। × "स्वमनीषिकया ? इत्याह" क. अ. प. म.।

यत्वादाधाकर्म्मभोजित्वस्य च योगरूपत्वादिति। तथा 'आउयं चे'त्यादि, आयुः पुनः कर्म्म, स्यात्-कदाचिद्बध्नाति स्यान्न बध्नाति, यस्मात् त्रिभागाद्यवशेषायुषः परभवायुः प्रकुर्वन्ति, तेन यदा त्रिभागादिस्तदा बध्नाति, अन्यदा न बध्नातीति। तथा 'असाये'त्यादि, असातावेदनीयं च-दुःखवेदनीयं कर्म्म पुनः 'भूयोभूयः' पुनःपुनः 'उपचिनोति' उपचितं करोति। ननु कर्म्मसप्तकान्तर्वर्त्तित्वादसातावेदनीयस्य पूर्वोक्तविशेषणेभ्य एव तदुपचयप्रतिपत्तेः किं* तद्ग्रहणेन ? इत्यत्रोच्यते-आधाकर्म्मभोजी अत्यन्तं दुःखितो भवतीति प्रतिपादनेन भयजननादाधाकर्म्मभोजित्वनिरासार्थमिदमित्यदुष्टमिति। 'अणाइयं'ति अविद्यमानादिकं 'अणवयग्गं'ति 'अवयग्ग'त्ति देशीवचनो अन्तवाचकस्ततस्तन्निषेधात् 'अणवयग्गं' अनन्तमित्यर्थः। अतएव 'दीहमद्धं'ति 'दीर्घाद्धं' प्रभूतकालं 'चाउरंतं'ति चतुरन्तं-देवादिगतिभेदाच्चतुर्विभागं, तदेव स्वार्थिक+प्रत्ययोपादानाच्चातुरन्तं 'संसारकान्तारं' भवारण्यं 'अणुपरियट्टइ'त्ति पुनःपुनर्भ्रमति। 'आयाए'त्ति आत्मना 'धर्म्मं' चारित्रधर्म्मं श्रुतधर्म्मं वा। 'पुढविकायं नावकंखइ'त्ति पृथ्वीकायं नापेक्षते-नानुकम्पत इत्यर्थ इति। एवं चानेन गाथासूत्रेणात्मनः कर्म्मबन्धाभिधानादात्मकर्म्मेत्यभिहितमिति गाथार्थः ॥ ७ ॥

एवं तावन्नामान्वर्थप्रतिपादनद्वारेण प्रथमदोषं व्याख्याय साम्प्रतं तमेव विशेषतो व्याचिख्यासुरिमां द्वारगाथामाह—

दी०—अष्टावपि कर्माणि ज्ञानावरणादीनि 'अधो' नरके बध्नाति ×प्रकृति-स्पृष्टरूपाभ्यां, प्रकरोति-स्थिति-बद्धरूपाभ्यां,

* "किमेतद्ग्र०" अ. य. । + "इकण्" इति पर्यायो अ. पुस्तके । "स्वार्थेऽण्" भां० ।

× प्रकृत्यादिस्वरूपं मोदकदृष्टान्तेन ज्ञातव्यं, यथा-प्रकृत्या कश्चिन्मोदको वातं हरति कश्चित्पित्तं कश्चिच्च श्लेष्माणं, स्थित्या

जाव तसकायं नावकंखइ । जेसिं पि य णं जीवाणं सरीरयाइं आहारमाहारेइ ते वि जीवे नावकंखइ, से एणट्ठेणं गोयमा! एवं वुच्चइ–आहाकम्मं णं भुंजमाणे जाव अणुपरिअट्टइ"त्ति । इदं च सुगमं, नवरं–' आउयवज्जाओ 'त्ति । यस्मादेकत्र भवग्रहणे सकृदेवान्तर्मुहूर्त्तमात्रकाल एवायुषो बन्धस्तत उक्तमायुर्वर्जा इति । ' सिढिलबंधणबद्धाओ 'त्ति श्लथबन्धनं–स्पृष्टता वा बद्धता वा निधत्तता वा, तेन ' बद्धा ' आत्मप्रदेशेषु सम्बन्धिताः, पूर्वावस्थायामशुभतरपरिणामस्य कथञ्चिदभावात् शिथिलबन्धनबद्धा, एताश्चाशुभा एव द्रष्टव्याः, आधाकर्म्मभोजिनिर्ग्रन्थस्य निन्दाप्रस्तावात् । ताः किमित्याह–' धणियबंधणबद्धाओ पकरेति 'त्ति गाढतरबन्धनबद्धा–बद्धावस्था वा निधत्तावस्था वा निकाचितावस्था वा प्रकरोति । प्रशब्दस्यादिकर्म्मार्थत्वात् सकृदाधाकर्म्मभोजनेऽपि कर्त्तुमारभते, आधाकर्म्मभोजित्वस्याशुभयोगरूपत्वेन गाढतरप्रकृतिबन्धनहेतुत्वात्, आह च–' जोगा※ पयडिपएसं 'ति, पौनःपुन्यसम्भवे तु तस्य ताः करोत्येवेति । तथा ह्रस्वकालस्थितिकाः दीर्घकालस्थितिकाः प्रकरोति, तत्र स्थितिः–उपात्तकर्म्मणोऽवस्थानं, तामल्पकालां महतीं करोतीत्यर्थः, आधाकर्म्मभोजित्वस्य लौल्यनिमित्तत्वात् तस्य च कषायरूपतया स्थितिबन्धहेतुत्वात्, आह च–' ठिई अणुभागं, कसायओ कुणइ 'त्ति । तथा मन्देत्यादि, इहानुभावो–विपाको रसविशेष इत्यर्थः, ततश्च मन्दानुभावाः–परिपेलवरसाः सती तीव्रानुभावा–गाढतररसाः प्रकरोति, आधाकर्म्मभोजित्वस्य कषायरूपत्वादनुभागबन्धस्य च कषायप्रत्ययत्वा×दिति । तथा ' अप्पपएसे 'त्यादि ' अल्पं ' स्तोकं ' प्रदेशाग्रं ' कर्म्मदलिकपरिमाणं यासां तास्तथा, ता बहुप्रदेशाग्राः प्रकरोति, प्रदेशबन्धस्यापि योगप्रत्य-

※ " योगात् प्रकृति-प्रदेशबन्धौ भवतः " × " निमित्तत्वात् " इति अ. प्रतिकृतौ पर्यायौ ।

अल्पबहुप्रदेशनिष्पन्नं स्यादिति । स्पृष्टादिस्वरूपं पुनरेवं–किल किञ्चित् कर्म्म जीवप्रदेशैः स्पृष्टमात्रं स्यात्तच्च कालान्तरस्थितिमप्राप्यैव विघटते, शुष्ककुड्यापतितशुष्कचूर्णमुष्टिवत् । किञ्चित्पुनः स्पृष्टं बद्धं च स्यात्तच्च कालान्तरेण विघटते, आर्द्रकुड्यापतितशुष्कचूर्णमुष्टिवत् । किञ्चित्पुनः स्पृष्टं बद्धं निधत्तं च स्यात्तच्च बहुतरकालेन विघटते, आर्द्रकुड्यापतितसस्नेहचूर्णपिण्डवत् । किञ्चित्पुनः स्पृष्टं बद्धं निधत्तं निकाचितं च स्यात्तच्च जीवेन सहैकत्वमापन्नं कालान्तरेण वेद्यत इति । किंविशिष्टः साधुरित्याह–' कंमियभोइ 'त्ति कार्मिकभोजी–लौल्यनिःशूकत्वाभ्यामाधाकर्म्माभ्यवहरणशीलः । अत्र च शीलार्थप्रत्ययोपादानं कारणानाभोगतद्भोक्तृनिरासार्थं, साधुर्मुनिरिति योजितमेव । ननु कथमिदमवसीयते ? यदुतोक्तविशेषणः साधुरष्टापि कर्माणि बध्नातीत्यादि, एतदाशङ्क्याह–' जं भणिय 'मित्यादि, यद्यस्मात्कारणा'द्भणितं' प्रतिपादितं, सुधर्मस्वामिनेति गम्यते, क्व ? भगवत्यां–विवाहप्रज्ञप्तौ [ प्रथमे शते नवमोद्देशके ], किमर्थापत्त्यादिना ? नेत्याह–' स्फुटं ' प्रकटं, तथा च तत्सूत्रं–" आहाकम्मं णं भुंजमाणे समणे निग्गंथे किं बंधइ ? किं पकरेइ ? किं चिणइ ? किं उवचिणइ ? । गोयमा ! आहाकम्मं णं भुंजमाणे आउयवज्जाओ सत्त कम्मपयडीओ सिढिलबंधणबद्धाओ धणियबंधणबद्धाओ पकरेइ, हस्सकालठिईयाओ दीहकालठिईयाओ पकरेइ, मंदाणुभावाओ तिव्वाणुभावाओ पकरेइ, अप्पपएसग्गाओ बहुपएसग्गाओ पकरेइ, आउयं च णं कम्मं सिय बंधइ सिय नो बंधइ, आसायावेयणिज्जं च कम्मं भुज्जो भुज्जो उवचिणइ, अणाइयं च णं अणवयग्गं दीहमद्धं चाउरंतसंसारकंतारं अणुपरियट्टइ । से केणऽट्ठेणं भंते ! एवं वुच्चइ ? आहाकम्मं णं भुंजमाणे जाव अणुपरिअट्टइ, गोयमा ! आहाकम्मं भुंजमाणे आयाए धम्मं अइक्कमइ, आयाए धम्मं अइक्कममाणे पुढविकायं नावकंखइ ५,

जाव तसकायं नावकंखइ । जेसिं पि य णं जीवाणं सरीरयाइं आहारमाहारेइ ते वि जीवे नावकंखइ, से एणट्ठेणं गोयमा! एवं वुच्चइ–आहाकम्मं णं भुंजमाणे जाव अणुपरिअट्टइ"त्ति । इदं च सुगमं, नवरं–' आउयवज्जाओ 'त्ति । यस्मादेकत्र भवग्रहणे सकृदेवान्तर्मुहूर्त्तमात्रकाल एवायुषो बन्धस्तत उक्तमायुर्वर्जा इति । ' सिढिलबंधणबद्धाओ 'त्ति श्लथबन्धनं–स्पृष्टता वा बद्धता वा निधत्तता वा, तेन ' बद्धा ' आत्मप्रदेशेषु सम्बन्धिताः, पूर्वावस्थायामशुभतरपरिणामस्य कथञ्चिदभावात् शिथिलबन्धनबद्धा, एताश्चाशुभा एव द्रष्टव्याः, आधाकर्म्मभोजिनिर्ग्रन्थस्य निन्दाप्रस्तावात् । ताः किमित्याह–' धणियबंधणबद्धाओ पकरेति 'त्ति गाढतरबन्धनबद्धा–बद्धावस्था वा निधत्तावस्था वा निकाचितावस्था वा प्रकरोति । प्रशब्दस्यादिकर्म्मार्थत्वात् सकृदाधाकर्म्मभोजनेऽपि कर्त्तुमारभते, आधाकर्म्मभोजित्वस्याशुभयोगरूपत्वेन गाढतरप्रकृतिबन्धनहेतुत्वात्, आह च–' जोगा* पयडिपएसं 'ति, पौनःपुन्यसम्भवे तु तस्य ताः करोत्येवेति । तथा ह्रस्वकालस्थितिकाः दीर्घकालस्थितिकाः प्रकरोति, तत्र स्थितिः–उपात्तकर्म्मणोऽवस्थानं, तामल्पकालां महतीं करोतीत्यर्थः, आधाकर्म्मभोजित्वस्य लौल्यनिमित्तत्वात् तस्य च कषायरूपतया स्थितिबन्धहेतुत्वात्, आह च–' ठिई अणुभागं, कसायओ कुणइ 'त्ति । तथा मन्देत्यादि, इहानुभावो–विपाको रसविशेष इत्यर्थः, ततश्च मन्दानुभावाः–परिपेलवरसाः सती तीव्रानुभावा–गाढतररसाः प्रकरोति, आधाकर्म्मभोजित्वस्य कषायरूपत्वादनुभागबन्धस्य च कषायप्रत्ययत्वा×दिति । तथा ' अप्पपएसे 'त्यादि ' अल्पं ' स्तोकं ' प्रदेशाग्रं ' कर्म्मदलिकपरिमाणं यासां तास्तथा, ता बहुप्रदेशाग्राः प्रकरोति, प्रदेशबन्धस्यापि योगप्रत्य-

* " योगात् प्रकृति-प्रदेशबन्धौ भवतः " × " निमित्तत्वात् " इति अ, प्रतिकृतौ पर्यायौ ।

अल्पबहुप्रदेशनिष्पन्नं स्यादिति । स्पृष्टादिस्वरूपं पुनरेवं–किल किञ्चित् कर्म्म जीवप्रदेशैः स्पृष्टमात्रं स्यात्तच्च कालान्तरस्थितिमप्राप्यैव विघटते, शुष्ककुड्यापतितशुष्कचूर्णमुष्टिवत् । किञ्चित्पुनः स्पृष्टं बद्धं च स्यात्तच्च कालान्तरेण विघटते, आर्द्रकुड्यापतितशुष्कचूर्णमुष्टिवत् । किञ्चित्पुनः स्पृष्टं बद्धं निधत्तं च स्यात्तच्च बहुतरकालेन विघटते, आर्द्रकुड्यापतितसस्नेहचूर्णपिण्डवत् । किञ्चित्पुनः स्पृष्टं बद्धं निधत्तं निकाचित्तं च स्यात्तच्च जीवेन सहैकत्वमापन्नं कालान्तरेण वेद्यत इति । किंविशिष्टः साधुरित्याह–' कंमियभोइ 'त्ति कार्मिकभोजी–लौल्यनिःशूकत्वाभ्यामाधाकर्म्माभ्यवहरणशीलः । अत्र च शीलार्थप्रत्ययोपादानं कारणानाभोगतद्भोक्तृनिरासार्थं, साधुर्मुनिरिति योजितमेव । ननु कथमिदमवसीयते ? यदुतोक्तविशेषणः साधुरष्टापि कर्माणि बध्नातीत्यादि, एतदाशङ्क्याह–' जं भणिय 'मित्यादि, यद्यस्मात्कारणा'द्भणितं' प्रतिपादितं, सुधर्मस्वामिनेति गम्यते, क्व ? भगवत्यां–विवाहप्रज्ञप्तौ [ प्रथमे शते नवमोद्देशके ], किमर्थापत्त्यादिना ? नेत्याह–' स्फुटं ' प्रकटं, तथा च तत्सूत्रं–" आहाकम्मं णं भुंजमाणे समणे निग्गंथे किं बंधइ ? किं पकरेइ ? किं चिणइ ? किं उवचिणइ ? । गोयमा ! आहाकम्मं णं भुंजमाणे आउयवज्जाओ सत्त कम्मपयडीओ सिढिलबंधणबद्धाओ धणियबंधणबद्धाओ पकरेइ, हस्सकालठिईयाओ दीहकालठिईयाओ पकरेइ, मंदाणुभावाओ तिव्वाणुभावाओ पकरेइ, अप्पपएसग्गाओ बहुपएसग्गाओ पकरेइ, आउयं च णं कम्मं सिय बंधइ सिय नो बंधइ, आसायावेयणिज्जं च कम्मं भुज्जो भुज्जो उवचिणइ, अणाइयं च णं अणवयग्गं दीहमद्धं चाउरंतसंसारकंतारं अणुपरियट्टइ । से केणऽट्ठेणं भंते ! एवं वुच्चइ ? आहाकम्मं णं भुंजमाणे जाव अणुपरिअट्टइ, गोयमा ! आहाकम्मं भुंजमाणे आयाए धम्मं अइक्कमइ, आयाए धम्मं अइक्कममाणे पुढविकायं नावकंखइ ५,

आत्मकर्मान्वयमाह—

**अट्ठवि कम्माइँ अहे, बंधइ पकरेइ चिणइ उवचिणइ ।**
**कम्मियभोई अ साहू, जं भणियं भगवईए फुडं ॥ ७ ॥**

व्याख्या—अष्टावप्यष्टसङ्ख्यान्यपि, न केवलं सप्तेत्यपि शब्दार्थः । कानीत्याह—कर्म्माणि ज्ञानावरणादीनि, किंविषयाणीत्याह 'अहे'त्ति अधोगतौ—अधोगतिविषयाणि, नरकगतिप्रायोग्याणीत्यर्थः । किमित्याह—' बध्नाति ' प्रकृतिरूपतया-स्पृष्टरूपतया वा निर्वर्त्तयति । तथा ' प्रकरोति ' स्थितिरूपतया बद्धरूपतया वा निष्पादयति । तथा ' चिनोति ' अनुभागरूपतया निधत्तरूपतया वा विधत्ते । तथा 'उपचिनोति' प्रदेशरूपतया निकाचनारूपतया वा सञ्जनयति, साधुरिति योगः । अत्र च प्रकृत्यादिस्वरूपं मोदकदृष्टान्तादवसेयं, यथा हि मोदको वाताद्यपहर्तृद्रव्यनिष्पन्नत्वात् प्रकृत्या कश्चिद्वातमपहरति, कश्चित्पित्तं, कश्चिच्च श्लेष्माणमित्यादि । स्थित्या तु स एव कश्चिद् दिनमेकमास्ते, कश्चिद्द्वयं, कश्चिच्च त्रयमित्यादि । अनुभावेन तु स्निग्धमधुरत्वलक्षणेन कश्चिदेकगुणानुभावः, कश्चिद् द्विगुणानुभावः, कश्चित् त्रिगुणानुभाव इत्यादि । प्रदेशैस्तु कणिकादिद्रव्यरूपैः कश्चिदेकप्रसृतिप्रमाणो भवति, अन्यस्तु प्रसृतिद्वयमानोऽपरस्तु प्रसृतित्रयमान इत्यादि । एवं कर्मापि ज्ञानावारकादिपुद्गलैर्निर्वृत्तत्वात् प्रकृत्या किञ्चित् ज्ञानमावृणोति, किञ्चिद्दर्शनं, किञ्चित्तु सुखदुःखे जनयतीत्यादि, स्थित्या तु त्रिंशत्सागरोपमकोटाकोट्यादिकालावस्थायि भवति । अनुभावेन त्वेकस्थानिक-द्विस्थानिक-तीव्रमन्दादिकरसोपेतं, प्रदेशतस्तु

